श्रीमध्वशिष्योत्तंसकविकुलतिलक-

त्रिविक्रमपण्डिताचार्यविरचिता

# श्रीनृसिंहस्तुतिः

श्रीराघवेन्द्रगुरुसार्वभौमपीठालंकारश्रीसुरीन्द्रतीर्थश्रीपादशिष्य-

श्रीसुमतीन्द्रतीर्थविरचितया

## एकावल्याख्यव्याख्यासंवलिता

गौरवसम्पादकाः

पण्डितकेसरी श्री राजा एस्. गिरि आचार्याः

प्रधानसम्पादकौ

विद्वान् श्री एस्. वि. भीमभट्टमहोदयः

विद्वान् श्री राजा एस्. पवमानाचार्यः

प्रकाशकः

अध्यक्षः

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः

मन्त्रालयः-518345 A.P.

श्रीशः शरणम् 5-12-2018

श्रीमध्वशिष्योत्तंसकविकुलतिलक-

त्रिविक्रमपण्डिताचार्यविरचिता

# श्रीनृसिंहस्तुतिः

श्रीराघवेन्द्रगुरुसार्वभौमपीठालंकारश्रीसुरीन्द्रतीर्थश्रीपादशिष्य-
श्रीसुमतीन्द्रतीर्थविरचितया

एकावल्याख्यव्याख्यासंवलिता

ರಂಗಾಚಾರ್ಯ ಹಾಜರಿಲ್ಲ.

गौरवसम्पादकाः

पण्डितकेसरी श्री राजा एस्. गिरि आचार्याः

ಪ್ರಹ್ಲಾದ ರಾಜಾಚಾರ್ಯ ಹಾಜರಿಲ್ಲ.

प्रधानसम्पादकौ

विद्वान् श्री एस्. वि. भीमभट्टमहोदयः

विद्वान् श्री राजा एस्. पवमानाचार्यः

प्रकाशकः

अध्यक्षः

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः

मन्त्रालयः–518345 A.P.

|| श्रीः ||

# श्रीनरसिंहावलोकनम्

## (नरसिंहस्तुतिपीठिका)

नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः ।
जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ॥
राघवेन्द्रगुरून्नत्वा सुमतीन्द्रांस्तथैव च ।
नरसिंहस्तुतेर्व्याख्या तदीया संप्रकाश्यते ॥

इह हि दुस्तरसंसारकान्तारे परिभ्रमतां सत्पथमलभमानानां सात्त्विकाध्वनीनानां सन्मार्गावलोकनाय दिवाकरायितस्य परमपुरुषस्य श्रीनृसिंहस्य स्तुतिरियं श्रीमध्वदेशिकानामन्तरङ्गभक्तगृहस्थाश्रमिशिष्येषु मूर्धन्यैः कविकुलतिलकैर्लिकुचवंशोद्भवैस्त्रिविक्रमपण्डिताचार्यैर्विरचिता गुरुद्वारा भगवति समर्पिता सकलानिष्टनिवृत्तिक्षमेति सुविदितमेव समेषां संप्रदायमार्गागतानां पण्डितपुण्डरीकाणाम् । इमे च त्रिविक्रमपण्डिताचार्याः कासरगोडु प्रदेशे विद्यमानकुम्बलेप्रान्ताधिपस्य जयसिंहभूपस्यास्थानीमलंकुर्वाणाः कावुमठे निवसन्तः बाल्य एव सर्वशास्त्रनदीष्णाः अनवद्यपद्यवादिनः, उपाहरणनामककाव्यकर्तारः, आचार्यैस्साकं सप्ताप्रानि दिनानि (पञ्चदशाहानि) वादं कृत्वा तच्छिष्या बभूवुरिति चारित्रिकमैतिह्यमखण्ड्यं प्रमाणमस्ति । गुर्वनुज्ञया प्राथमिकीं श्रीमद्ब्रह्मसूत्रभाष्यस्य तत्त्वप्रदीप(दीपिका)नामिकां टीकां विलिख्य तदनन्तरमागतानां सर्वेषां माध्वग्रन्थटीकाकर्तॄणां परममान्या

अप्यभवन्नित्यप्यैतिह्यमतिरोहितमखिलानां वैष्णवशास्त्रमार्गावलम्बिनाम्। तैरेव निर्मितेयं नरसिंहस्तुतिः श्रीसुमतीन्द्रतीर्थश्रीमच्चरणकृतैकावलीनामकव्याख्यासमलंकृता संप्रति संप्रकाश्यते। सुन्दरसुरेन्द्रभद्रासनवद्विराजमाने वृन्दावने सशरीरमद्यापि विराजमानानां श्रीराघवेन्द्रगुरुसार्वभौमानां प्रशिष्यसुरीन्द्रकरकमलसञ्जाताः श्रीसुमतीन्द्रतीर्थश्रीमच्चरणाः समस्तशास्त्राभ्यन्तराः विशेषतः साहित्यकलानिपुणाः अस्याः कृतेर्व्याख्यामतानिपुः, यया गुणरत्नमालिकयेवैकावलीनामिकया भूषितेयं स्तुतिर्नरसिंहस्य हृदयंगमा वक्षःस्थले विशेषतो राजतेतमाम्। न केवलमेते यतिशिरोमणयः काव्यनिर्माण - स्तोत्रव्याख्यानमात्रे विश्रान्तपाण्डित्याः, एतेषां ब्रह्मसूत्रभाष्यतत्त्वप्रकाशिकाभावरत्नकोशः, गीताभाष्यप्रमेयदीपिकाभावरत्नकोशः इत्यादयः माकिमुपदशाः ग्रन्थमणयः प्रकाशनहस्तं निरीक्षमाणाः सन्ति। श्रीराघवेन्द्रगुरूणामनुग्रहेण शीघ्रमिदं कार्यं सम्पत्स्यते इत्याशंसामहे।

अस्तु। प्रकृते प्रकाश्यमानेयं स्तुतिः त्रिविक्रमपण्डितीयेत्यत्र व्याख्याकर्तॄणां—' त्रिविक्रमार्येण समुद्धृतं धीसिंधोर्नृसिंहस्तुतिकौस्तुभं तम्। शुश्रूपुरेकावलिमातनोति व्याख्यासुवर्णैस्सुमतीन्द्रयोगी॥ इति वचनं शुद्धं परमं प्रमाणम्। अनन्तशयने केरलजपण्डिताः पराजिताः पण्डिताचार्यान् अभिचारप्रयोगेण मारयितुमुदयुञ्जत, तत्प्रयुक्तां कृत्यामतिवर्तितुं नरसिंहस्तुतिरकारि लिकुचपण्डितवर्यैरित्यैतिह्यमपि समुदलेखि सुमतीन्द्रयोगिभिः। केचित्तु

स्तुतिरियं पूर्वोक्तसंदर्भ एव तत्पुत्रैः नारायणपण्डितार्यैर्निर्मितेत्यभिप्रयन्ति । परन्तु तत्र प्रबलं प्रमाणमैतिह्यं वा तैर्नोल्लिखितम् । लिकुचतिलकसूनुः सद्धितार्थानुसारी इति पश्चिमपद्यं तूभयथापि सुयोजम् । किंच नारायणाचार्यनामकाः स्तुतेरेतस्या व्याख्यातारः त्रिविक्रमपण्डितार्यानेवैतस्याः स्तुतेः कर्तृनामनन्ति । किंच शिवस्तुतेरन्ते नारायणपण्डिताचार्यैः स्वनामोल्लेखः कृतः, अत्र तथा अकरणेन नैषा स्तुतिस्तत्कृतेत्यूह्यते । अपि च वादाहवकेसरिणः एते त्रिविक्रमपण्डिता एव पराजितपरदर्शनपण्डितानामाग्रहदृष्टिविषयाः तद्दृष्टिदोषविषमपसारयितुकामाः विषकण्ठस्य विषपीडापरिहारककण्ठमणिं श्रीनृसिंहमस्तौपुरित्युपपत्तिरपि सुलभा । आचार्यैः श्रीनृसिंहस्तुतिरकारि, तच्छिष्या एते नखादिशिखान्तमिष्टदैवतं नरसिंहमनिष्टनिरसनार्थं प्रार्थयामासुरित्यप्यूहामहे ।

किञ्च शा. श. १८४७ (क्रिस्तशक १९२७) प्रभवसंवत्सरे रजतपीठपुरे श्रीकृष्णमुद्रणालये पावञ्जे गुरुरायशर्मणा संप्रकाशितस्य सौमतीन्द्रीयरसिकरञ्जनीटीकासमेतस्य त्रिविक्रमपण्डिताचार्यविरचितोषाहरणमहाकाव्यस्य भूमिकायां ग्रन्थसंशोधकाः प्रसिद्धपण्डिताः वि. श्रीनिवासभट्टमहोदयाः साहित्यशिरोमणयः एवमलेखिषुः ।

''एतत्काव्यकर्ता तौलवलिकुच(पेजताय)कुलजात् सुब्रह्मण्यसूरेः पश्चिमाब्धितीरे कुम्बलेजनपदे कावुमठाख्यगृहे हरिहरयोः

प्रसादेन लब्धजन्मा कविकुलतिलकस्त्रिविक्रमपण्डितः। एनं सुजनज्ञानाभिवृद्धयेऽवतीर्णं शिवं मन्वते परमैतिहासिकाः। श्रीमाध्वमतदीक्षामूढा श्रुतद्वैतसिद्धान्तः स्वयं माध्वसूत्रभाष्यस्य टीकां कृत्वा असूयुमायिजनप्रहितकृत्यानिहन्त्रीं **नृसिंहस्तुतिं,** विष्णुस्तुतिं, वायुस्तुतिं च प्रणिनाय'' इति।

एतल्लेखदर्शनेन स्फुटं विज्ञायते यत् त्रिविक्रमपण्डिताचार्य एव स्तुतेरस्याः कर्तेति। 'अस्य कवेः नारायणपण्डिताख्यः सुमध्वविजयकर्ता **कुमारांशः** सुतश्चासीत्' इति पुनस्तत्रैवोल्लेख-दर्शनात् निश्चप्रचं शिवावतारस्त्रिविक्रमपण्डितः स्वोपास्यं लक्ष्मी-नृसिंहं **नरसिंहस्तुत्या,** तत्पुत्रः कुमारांशः नारायणपण्डितः कुमारपितरं, शिवं (स्वपितरं) **शिवस्तुत्या** अभ्यार्हीत् इति। तदित्थं त्रिविक्रमपण्डिताचार्या एवैतस्याः स्तुतेः निर्मातार इति शासनसिद्धोऽयं विषयः।

अस्तु। प्रकृतेऽस्मिन् ग्रन्थे योजितायां व्याख्यायामुल्लेखनीया एते विशेषांशाः सन्ति, येऽन्यत्र प्रायो दुर्लभा एव—

१. प्रत्येकस्यापि कठिनशब्दस्य व्याकरणकोशोल्लेखादि-पुरस्सरं विग्रहं विलिख्य व्याचक्षते।

२. कचित्पक्षान्तरमपि अनूद्य तत्पक्षस्य समीचीनत्वे तद्-व्याख्यां भूषयन्ति, विपक्षेऽस्वरसं प्रकटयन्ति।

३. अन्वयमुखेनैव व्याख्यां प्रतन्वन्ति, अनपेक्षितं किमपि न लिखन्ति।

४. अनेककोशान् व्याकरणान्तराणि च तत्र तत्र विचारयन्त एते तलस्पर्शि व्याख्यानमत्रोपस्थापयन्ति ।

५. केषांचन श्लोकानां व्याख्यानान्तराणि तत्र तत्र प्रदर्शयन्ति ।

एतादृगिदं अपूर्वं प्रौढं परमसुन्दरं व्याख्यानं समूलं प्रकटनीयमिति आचार्यान् श्री गिरि आचार्यान् समाज्ञापितवन्तः श्री १०८ सुशमीन्द्रतीर्थश्रीमच्चरणाः । तेषामाज्ञां शिरसा धारयित्वा कार्यमिदं संपादितम् ।

एतत्संशोधने उपयुक्ताः मातृकाः—

१. अस्मद्विद्यापीठीयग्रन्थालयीया प्रतिः ।

२. गुरुसार्वभौमपूर्वाश्रमवंशीयानां पण्डितप्रकाण्डानां गिरि आचार्याणां ग्रन्थालयीया प्रतिः ।

३.—४. अपरं च मातृकाद्वयम् ।

एवं मातृकाचतुष्टयमुपयुज्य संशोधनकार्ये विशेषोत्साहेन भागमूढवन्तः सुधियः ।

व्याकरणाध्यापकः श्री एन्. आर्. द्वारकानाथः, अध्यापकः पुराणिकसुब्रह्मण्याचार्यः, अध्यापकः लक्ष्मेश्वरकृष्णाचार्यः एतेषां सहकारेण कार्यमिदं संपन्नम्। सर्वेभ्यः ग्रन्थपठितृभ्यः, एतन्मुद्रापकेभ्यश्च भगवान् श्रेयांसि प्रददातु इत्यभ्यर्थयामहे ।

इत्थम्

संपादकमंडली

वेदान्तकेसरी राजा एस्. गिरि आचार्याः

अध्यक्षाः

विद्वान् एस. वि. भीमभट्टमहोदयः

विद्वान् राजा एस्. पवमानाचार्यः

संपादकौ

मंत्रालयक्षेत्रम्

युवसंवत्सरीय मार्गशीर्ष-

पूर्णिमा

# श्रीमदानन्दतीर्थभगवत्पादाः



येनाहमिह दुर्मार्गादुद्धृत्याभिनिवेशितः ।
सम्यक् श्रीवैष्णवे मार्गे पूर्णप्रज्ञं नमाम्यहम् ॥

# श्रीराघवेन्द्रतीर्थगुरुसार्वभौमाः



श्रीमतो राघवेन्द्रस्य नमामि पदपङ्कजे ।
कामिताशेषकल्याणकलनाकल्पपादपौ ॥

॥ श्री कृष्णाय नमः ॥ ॥ श्री गुरुभ्यो नमः ॥

## श्रीत्रिविक्रमपण्डिताचार्यविरचिता

# श्रीनृसिंहस्तुतिः

### श्रीमत्परमहंसेत्यादिबिरुदाङ्कितसुमतीन्द्रतीर्थविरचितया

## एकावली व्याख्यया सहिता



श्रीमल्लक्ष्मीनृसिंहस्य वपुर्दिशतु मे श्रियम् ।
स्वभक्ताखिलकल्याणविश्राणनविचक्षणम् ॥ १ ॥

भक्ता यत्र भजन्ति मां तदिह मे धामेत्यदो व्यञ्जितुं
प्रह्लादोक्तनिजस्थितादरिगृहस्थूणात् प्रजज्ञे उभौ ।
बाहू मां नृहरेश्चतुर्दशसु तेष्वन्येष्वहो साक्षिषु
त्रायेतामसुरस्य वक्षदलने वरसावने चोद्यतौ ॥ २ ॥

धृतश्रि सान्त्रं ज्वलदक्षमद्भुतं (मुद्भुजं)
ददातु नार्केसरिणं वपुर्मुदम् ।
तटित् सुरास्त्रानलवज्रधाम मे
द्विषामजन्यं शरदभ्रमद्भुतम् ॥ ३ ॥

आमोदं यो व्यतानीद्रघुकुलतिलके सेवया श्रीहनूमान्
भीमात्मा कृष्णदेवे प्रबलधरणिपव्याजवैरीन्द्रहत्या ।

मध्वाख्यो ब्रह्मसूत्रप्रभृतिकृतिकृतान्योक्तिभाष्यादिकृत्या
श्रीवेदव्यासदेवे स दिशतु सुदृशं श्रीमदानन्दतीर्थः ॥ ४ ॥

श्रीमदानन्दतीर्थार्यान् जयतीर्थार्यदेशिकान् ।
व्यासराजमुनीन् वन्दे राघवेन्द्रगुरूनपि ॥ ५ ॥

भूरिमनीषागमचितकरुणान् श्रीजयतीर्थव्रतिकृतिशरणान् ।
सन्ततमीडे सुचरितवरणान् (चरणान्) वेंकटनारायण-
गुरुचरणान् ॥ ६ ॥

त्रिविक्रमार्येण समुद्धृतं धीसिन्धोर्नृसिंहस्तुतिकौस्तुभं तम् ।
शुश्रूषुरेकावलिमातनोति व्याख्यां सुवर्णैस्सुमतीन्द्रयोगी ॥ ७ ॥

श्रीत्रैविक्रमपण्डितार्यकविनानन्तादिपुण्यस्थली-
भाजा केरलजाः श्रुतेषु वदता दुष्पण्डिताः खण्डिताः ।
द्रोग्धारोऽथ कुमन्त्रशक्तिभिरमी तत्रापि वित्रासिताः
स्तुत्या प्रस्तुतकृत्ययेव नृहरेरैतिह्यमित्यूह्यते ॥ ८ ॥

श्रीमान् त्रिविक्रमपण्डिताचार्यः श्रीमन्तं नरसिंहं तुष्टूषुः स्तोत्रादौ मङ्गलमाचरति उदयरवीति ॥

उदयरविसहस्रद्योतितं रूक्षवीक्षं
प्रलयजलधिनादं कल्पकृद्वह्निवक्त्रम् ।
सुरपतिरिपुवक्षःक्षोदरक्तोक्षितांगं (वक्षश्छेद)
प्रणतभयहरं तं नारसिंहं नमामि ॥ १ ॥

उदयस्य उदयकालस्य रवयः सूर्याः तेषां यत् सहस्रं तस्य द्योतितं 'नपुंसके भावे क्तः' (पा ३-३-११४) इति भावे निष्ठा। दीप्ति-रिव द्योतितं यस्य। उदुपधाद्भावादिकर्मणोरन्यतरस्याम् (पा. १-२-२१) इति कित्त्वविकल्पान् द्युतेर्गुणः। सप्तम्युपमानपूर्व-पदस्य बहुव्रीहिर्वाच्यः, वाच्यो वा चोत्तरपदलोपश्चेति बहुव्रीहौ उत्तरपदलोपः। उद्यत्सहस्रभानुदीधितिमित्यर्थः। रूक्ष पारुष्ये इति धातोः रूक्षाः परुषाः वीक्षाः वीक्षणानि यस्य तं, रूक्षवीक्षं रूक्षाशब्दस्य स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रिया-मपूरणीप्रियादिषु (पा. ६-३-३४) इति पुंवद्भावः। वीक्षाशब्दस्य तु गोस्त्रियोरुपसर्जनस्य (पा. १-२-४८) इति ह्रस्वः। रूक्षवीक्षं। प्रलयस्य प्रलयकालस्य जलधिः समुद्रस्तस्य नादो घोष इव नादो यस्य तम् कल्पः, 'कल्पो ब्रह्मदिनं विधौ। प्रलयन्यायशास्त्रेषु सुरद्रुमविकल्पयोः॥' इति कविदर्पणोक्तेः प्रलयकालः। तं करो-तीति कल्पकृत्। क्विप् च (पा. ३-२-७६) इति कर्तरि क्विप्। कल्पस्य कृत् कल्पकृत इति वा। वह्निः वक्त्रे यस्य तम्। कल्पं करोतीति विग्रहेऽपि कर्मण्यण् (पा ३-२-१) प्रत्ययः वासरूपो-ऽस्त्रियामिति (पा. ३-१-९४) शास्त्रेणात्र बाधनीयः। सुरपते-रिन्द्रस्य रिपुः शत्रुर्हिरण्यकशिपुः तस्य वक्षसः उरसः (छेदो) क्षोदो विदारणम्, तस्य रक्तम्, तेन उक्षितानि सिक्तान्यंगानि यस्य तं तथोक्तम्। प्रणतानां प्रकर्षेण भक्तिश्रद्धाद्यतिशयेन नतानाम, गत्यर्थाकर्मकेत्यादिना (पा. ३-४-७२) कर्तरि क्तः। तथाच

द्वितीयाश्रितेतिसूत्रे (पा. २-१-२४) श्रितशब्दः कर्तरि क्तप्रत्ययान्तया वैयाकरणैर्व्युत्पादितः। यद्वा आदिकर्मणि क्तः कर्तरि च (पा ३-४-७१) इति क्रियाप्रारंभरूपादिकर्मणि कर्तरि क्तप्रत्ययः। भयं हरतीति हरतेरनुद्यमनेऽच् (पा. ३-२-९) इत्यच् प्रत्ययः। भयहरः तं प्रसिद्धं नरश्च सिंहश्च तयोः सम्बन्धी तस्येदम् (पा. ४-३-१२०) इत्यणि नारसिंहः तम, नरसिंहयोराकारं वहन्तमित्यर्थः। नरसिंह एव नारसिंह इति प्रज्ञादित्वात् स्वार्थेऽणि वा (प्रज्ञादिभ्यश्च पा. ५-४-३८) रूपम्। नमामि णम प्रह्वत्वे शब्देचेति धातोर्लटिरूपम्। नमस्करोमि।

अत्रादौ मंगलार्थकमुदयशब्दं प्रयुञ्जानः कविः स्वकृतेरभ्युदयहेतुतामभिसन्धत्ते। यदाह वृत्तिकारः 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् इति सूत्रे (पा. ८-४-६७) उदात्तस्वरितपरमिति वक्तव्ये उदयग्रहणं मंगलार्थमिति।

अस्मिन् प्रबन्धे मालिनीवृत्ते नगणद्वयस्य मगणस्य यगणद्वयस्य च प्रयोगात्, नः स्वश्रिगयुस्त्रिलः मो भूमिस्त्रिगुरुः श्रियं वितनुते योऽभ्युदयं च यः प्रथमलः इति शास्त्रोक्तफलानि चिरायुःश्रीसमभ्युदयलक्षणानि अधिकारिणां भवन्तीति ज्ञापितम्। तथाच वक्ष्यति सुनियमनयकृत्यैः सद्गुणैर्नित्ययुक्ता मालिनीति। उदयरविसहस्रद्योतितमित्यत्र प्रलयजलधिनादमित्यत्र च लुप्तोपमायाः अर्थालंकारस्य च, रूक्षवीक्षं, वह्निवक्त्रं, वक्षःक्षोदरक्तोक्षितांगमित्यत्र च क्षवर्णववर्णयोरसकृदावृत्त्या, वृत्त्यनुप्रासस्य शब्दालंकारस्य च संसृष्टिः ॥ १ ॥

प्रलयरविकरालाकाररुक्चक्रवालं
विरलयदुरुरोचीरोचिताशान्तराल ॥
प्रतिभयतमकोपात्युत्कटोच्चाट्टहासिन्
दह दह नरसिंहासह्यवीर्याहितं मे ॥ २ ॥

**प्रलयरवीति** ॥ प्रलयस्य प्रलयकालस्य ये रवयः तेषां, करालाः 'करालो दन्तुरे तुङ्गे विशाले भीषणेऽपि च' इत्यभिधानात्, भीषणाः आकाराः यासां ताश्च ता रुचश्च तासां चक्रवालं मण्डलं विरलयत् विरलम् अल्पं कुर्वत्, तत्करोतीति णिच्, तच्च तत् उरु महच्च तद्रोचिः प्रकाशः, तेन रोचितं प्रकाशितं आशानां दिशामन्तरालम्, अभ्यन्तरम्, येन स तथा तस्य सम्बुद्धिः । रोचीरोचितेत्यत्र ढ्लोपे पूर्वस्य दीर्घोऽणः (पा ६-३-१११) इति पूर्वदीर्घः । प्रतिभयः अन्यभयङ्करः अतिशयेन प्रतिभयः प्रतिभयतमः स चासौ कोपश्च तेन, मत्ते शौण्डोत्कटक्षीबाः इत्यभिधानात्, अत्युत्कटोऽतिमत्तश्चासावुच्चश्च उन्नतश्चासौ 'निकुञ्चितशिरोगात्रमट्टहासो महाहसः' इति वैजयन्त्युक्तो महाहासोऽट्टहासोऽस्यास्तीति तथा तस्य सम्बुद्धिः । पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे (पा. २-२-१) इति ज्ञापकात् न कर्मधारयान्मत्वर्थीय इति वचनमनादृतम् । यद्वा प्रतिभयतम ! कोपेन अत्युत्कटोच्चं यथा भवति तथा अट्टेन अतिशयेन हसितुं शीलमस्यास्तीत्यर्थे, सुप्यजातौ णिनिस्ताच्छील्ये इति (पा. ३-२-७८) हसतेर्णिनिप्रत्यये हासिन् शब्दः । तस्य सम्बुद्धिः । अत्र 'अट्टं

पक्वौदने घातेऽतिशये क्षौमवेश्मनोः' इत्यभिधानात् अट्टशब्दस्यातिशयोऽर्थः ।

असह्यं सोढुमशक्यं, वीर्यं बले प्रभावे च इत्यमरकोशात् वीर्यं प्रभावो यस्य सः, असह्यवीर्य ! नरसिंह ! मे मम अहितं दुरितादिरूपं बाह्यमाभ्यन्तरं च शत्रुं दह दह । दह भस्मीकरणे इत्यतो नित्यवीप्सयोः (पा. ८-१-४) इति सूत्रेण आभीक्ष्ण्यशब्दितनित्यतायां द्विर्वचनम् । भस्मीकुरु इति प्रार्थनायां लोट् ॥ २ ॥

सरसरभसपादापातभाराभिराव-
प्रचकितचलसप्तद्वन्द्वलोकस्तुतस्त्वम् ।
रिपुरुधिरनिषेकेणेव शोणांघ्रिशालिन्
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ३ ॥

श्रीनृसिंहं आपादमस्तकपर्यन्तं विवर्णयिषुरादौ पादं वर्णयति **सरसेति** ॥

रिपुरुधिरनिषेकेण रिपोर्हिरण्यकशिपोः रुधिरं वक्षोविदारणजन्यं रक्तं तस्य निषेकोऽभिषेकस्तेनेवेति हेतूत्प्रेक्षालंकारः शोणौ लोहितौ अंघ्री चरणौ ताभ्यां शालते शाल श्लाघायां, शोभते णिनिस्ताच्छील्ये, शोणांघ्रिशाली तस्य संबुद्धिः असह्यवीर्य नृसिंह । शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः इत्यमरोक्तेः रसो वीर्यम्, रभसः युयुत्सया गमनवेगश्च ताभ्यां सहितौ सरसरभसौ, तौ च तौ पादौ च तयोरापाताः, आयोधनभूम्यामाघाताः

प्रहाराः तेषां भारः, भारौ तु भग्पीवरौ इति कविदर्पणोक्तेः, भरोऽतिशयः, तस्य अभिरावः, तज्जनितध्वनिः तेन प्रचकिताः चक तृप्तौ प्रतिघाते चेति धातोर्निष्ठायाम्। प्रतिहताः अत्यन्त-भीता इति यावत्। अत एव चलाः चंचलाः सप्तानां द्वन्द्वं सप्तद्वन्द्वं चतुर्दश च ते लोकाश्च तत्रत्याः भक्ताः तैः स्तुतस्त्वम्, मेऽहितं दह दह इत्यन्वयः ॥ ३ ॥

**तव घनघनघोषो घोरमाघ्राय जंघा-**
**परिघमलघुमूरुव्याजतेजोगिरिं च ।**
**घनविघटितमागाद्दैत्यजंघालसंघो**
**दह दह नरसिंहासह्यवीर्याहितं मे ॥ ४ ॥**

जंघे ऊरू च वर्णयति **तव घनेति**। असह्यवीर्य नरसिंह! यस्य तव घनघनघोषः 'अयोघनमुक्तापरिघमेघेषु त्रिषु त्वधिक-सांद्रयोः' इति कविदर्पणोक्तेः घनो मेघः तस्य घनः सान्द्रो घोषो ध्वनिः यस्य स तथा घन इव घनः घोषः यस्य सः घनघन-घोषः, दैत्येषु जंघालाः, प्राणिस्थादातो लजन्यतरस्याम् (५-२-९६) इति जङ्घाशब्दान्मत्वर्थीये लचि जंघावन्तो वेगिनः अत एव जंघालोऽतिजवस्तुल्यौ इत्यमरः। तेषां संघः समूहः, घोरं भयंकरं जंघा परिघ इव, उपमितं व्याघ्रादिभिः सामान्या-प्रयोगे (२-१-५६) इत्युपमितसमासः। प्रथिमादेः साधारण-धर्मस्य अनुपादानात्, घोरत्वमुपात्तमपि न साधारणधर्मतया-विवक्षितम्। अत एव भाग्याब्धिः कातिगम्भीर इति कैयटप्रयोगो गांभीर्यस्य साधारणधर्मत्वाविवक्षयैव निर्व्यूढः तव्द्याख्यातृभिः।

यद्वा जंघैव परिघो जंघापरिघः मयूरव्यंसकादयश्च (२-१-८२) इति समासः। अलघुं स्थूलम् ऊरोर्व्याजः ऊरुव्याजः स चासौ तेजोगिरिः प्रतापदुर्गः, तं च आघ्राय किंचिदालोक्य। परिघदुर्गयोररि (रिपु) भीषणत्वादियमुक्तिः। घनविघटितम्। उक्तकोशादधिकविघट्टनं, भावे निष्ठा अत्यन्तविकीर्णतां पलायनमिति यावत्। आगात्, इणो गा लुङि (२-४-४५) इति गादेशः। अगमत्। स त्वं मेऽहितं दह दहेति पूर्ववत्। अत्र घवर्णस्य असकृदावृत्तेः वृत्त्यनुप्रासः इति शब्दालंकारः। वृत्त्यनुप्रास एकस्याप्यावृत्तिरसकृद्यदा इति हि तल्लक्षणम्। अलघुव्याजतेजोगिरिमित्यत्र कैतवापह्नुतिः, 'कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः' इति तल्लक्षणमित्युभयोः संसृष्टिः ॥ ४ ॥

**कटकिकटकराजद्धाटकाग्र्यस्थलाभा-**<br>
**प्रकटपटतटित्ते सत्कटिस्थातिपट्वी ।**<br>
**कटुककटुकदुष्टाटोपदृष्टिप्रमुष्टौ**<br>
**दह दह नरसिंहासह्यवीर्याहितं मे ॥ ५ ॥**

कटिप्रदेशं वर्णयति **कटकीति**॥ असह्यवीर्य नरसिंह यस्य ते तव सती च सा कटिश्च सत्कटिः तत्र तिष्ठतीति सत्कटिस्था कटकिनः, कटकोऽस्त्री नितम्बोऽद्रेः इत्यमरोक्तेः। कटकः नितम्बः तद्वतः पर्वतस्य कटकेषु सानुषु राजत् दीप्यमानं च तत् हाटकं, सुवर्णं स्वर्णं कनकं हिरण्यं हेम हाटकम् इत्यमरोक्तेः। तस्य सुवर्णस्य अग्र्यं स्थलं उत्तमप्रदेशः, अस्य आभा कान्तिरिव आभा

यस्याः सा तथोक्ता प्रकटपटतटित् प्रकटः प्रकाशमानः पटः पीताम्बरमेव तटित् विद्युत्, रसे कटुः कटुकार्ये त्रिपु मत्सरतीक्ष्णयोरित्यमरः। कटवः तीक्ष्णाः पदार्थाः, कुत्सिते (५-३-७४) इति कप्रत्ययः। अत्यन्तकुत्सिता रागादयः तत्सदृशः कटुककटुकः 'प्रकारे गुणवचनस्य' (८-१-१२) इति द्विर्वचनम्, स चासौ दुष्टः आटोपः सम्भ्रमः 'संभ्रमाटोपसंरंभाः' इति यादवः। येषां दैत्यानां ते तथोक्ताः दृष्टयो लोचनानि तासां प्रमुष्टिः प्रमोषः मुष स्तेये, अपहारः तस्याम्। अतिपट्वी 'वोतो गुणवचनात्' (४-१-४४) इति ङीष्, अतिसमर्था, स त्वं मे अहितं दह दह इत्यन्वयः।

यथा तटित् पश्यतां दृष्टिं प्रमुष्णाति तथा पीताम्बरमपि दुष्टानां दैत्यानां दृष्टिमपहरतीति भावेन पटतटिदिति रूपकालंकारो निबद्धः ॥ ५ ॥

प्रखरनखरवज्रोत्खातरूक्षारिवक्षः
शिखरिशिखररक्तैराक्तसन्दोहदेह।
सुवलिभशुभकुक्षे भद्रगंभीरनाभे
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ६ ॥

उदरं वर्णयति प्रखरेति। प्रकर्षेण खरः। (प्रकृष्टाः खराः) तीक्ष्णाः तिग्मं तीक्ष्णं खरम् इत्यमरः। नखराः नखाः नखोऽस्त्री नखरोऽस्त्रियाम् इत्यमरः। त एव वज्राः तैरुत्खातम् अवदारितम्, खनु अवदारणे इति धातोः। तच्च तद्रूक्षं

परुषं रूक्ष पारुष्ये इति धातोः तत्र तत् अरिवक्षः हिरण्यकशिपु-वक्षःस्थलं तदेव शिखरिशिखरम् पर्वतशृङ्गं तस्य रक्तैराक्तः भूषितः (रूषितः) संदोहः कंठवक्षःकुक्ष्याद्यवयवसमुदायो यस्य तादृशो देहो यस्येति बहुव्रीहिगर्भो बहुव्रीहिः। समूहनिवहव्यूहसंदोहविसर-व्रजाः इत्यमरः। संदोहो वासुदेवकः। नारायणोऽथ संदोहो वासुदेवः शिरोऽपि वेत्यत्र संदोहशब्दस्य मध्यदेहवाचित्वेन अभि-युक्तैर्व्याख्यातत्वात्। देहपदावैयर्थ्याय मध्यमात्रवाचित्वेन अभ्युप-गम्य सन्दोहदेह मध्यदेहेति वा व्याख्यायेम्। सुवलिभ सुवलयो वलित्रयं ता अस्य सन्तीति मत्वर्थे तुंदिवलिवटेर्भः (५-२-१३९) इति भप्रत्ययः। शोभमानो वलिभः सुवलिभः। शोभमानत्वं योग्यतया वलिष्वन्वेति। न च शोभमाना वलयोऽस्य सन्तीत्यर्थे भप्रत्ययोत्पादनं कस्मान्न क्रियत इति वाच्यम्। तदन्तग्रहणस्य तत्सूत्रेवैयाकरणैर्व्युत्पादनात्।

केचित्तु वलीनां भा कान्तिर्वलिभा शोभना वलिभा यस्य सः सुवलिभः शुभः कुक्षिः यस्य सः तथा तस्य सम्बुद्धिरित्यैक-पद्येन (एकपदेन) व्याचक्षते।

भद्रा शोभना गंभीरा निम्ना नाभिः यस्य सः तथा तत्-सम्बुद्धिः। निम्नं गंभीरं गंभीरमित्यमरः। हे असह्यवीर्य नरसिंह मे अहितं दह दहेत्यन्वयः॥ ६॥

**स्फुरयति तव साक्षात्सैव नक्षत्रमाला**
**क्षपितदितिजवक्षोव्याप्तनक्षत्रमार्गम्।**

अरिदरधर जान्वासक्तहस्तद्वयाहो
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ७ ॥

उरः स्तौति **स्फुरयति** । अराणि अस्य सन्तीति अरि चक्रं, दरः शंखश्च अरिदरौ, धरतीति धरः पचाद्यच् अरिधरयोर्धरः अरिदरधरः । कर्तृकर्मणोः कृति (२-३-६५) इति कर्मणि षष्ठी ।

यद्वा अरिदरौ धरतीत्यरिदरधरः इत्युपपदसमासः । कर्मण्यण् प्रत्ययस्तु— 'अज्विधिस्सर्वधातुभ्यः पठ्यन्ते च पचादयः । अण् बाधनार्थमेतत् स्यात् सिध्यन्ति च पचादयः ॥' इति वैयाकरणवचनात्, (काशिका नन्दिग्रहि ३-१-१३४) अच् प्रत्ययेन बाधनीयः इति अरिदरधर इति युक्तम् ।

जानुनोरासक्तं विन्यस्तं हस्तयोर्द्वयं यस्य सः तथा तत्-संबुद्धिः । असह्यवीर्य नरसिंह तव साक्षात् प्रत्यक्षभूता साक्षात् प्रत्यक्षतुल्ययोरित्यमरः । नक्षत्रमाला, सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैरित्यमरोक्तेः । साक्षान्नक्षत्रमालेव नक्षत्रमाला, सप्तविंशतिसंख्याकमुक्तामणिशालिनी मुक्तावली क्षपितो विनाशितो यो दितिजः हिरण्यकशिपुः तस्य वक्षसा व्याप्तो यो नक्षत्रमार्गः तं स्फुरयति स्फुरं प्रकाशमानं करोति, स्फुर स्फुरण इति धातोः कर्तरि [1]इगुपधलक्षणः कः । ततस्तत्करोतीति णिच् ॥ स्फुरतेरेव हेतुमति णिजुत्पादने चिस्फुरोर्णौ (६-१-५४) इत्यात्वविकल्पात्

1. इगुपधज्ञाप्रीकिरः कः (३-१-१३५)

स्फोरयति स्फारयतीति वा स्यात्। संज्ञापूर्वोकोविधिरनित्य इति-स्फरयतीत्यत्र गुणाभाव इत्यप्याहुः ।

अहो आश्चर्यम् अतिविपुलहिरण्यकशिपुवक्षःकवाटविपाटनेन तदपिहितनक्षत्रमार्गप्रभादायिनी भगवद्वक्षःस्थलासक्तमौक्तिकमाले-त्युपवर्णितं भवति । स त्वं मेऽहितं दहदहेत्यन्वयः ॥ ७ ॥

**कटुविकटसटौघोद्घट्टनोद्भ्रष्टभूयो**
**घनपटलविशालाकाशलब्धावकाशम् ।**
**करपरिघविमर्दप्रोद्यमं ध्यायतस्ते**
**दह दह नरसिंहासह्यवीर्याहितं मे ॥ ८ ॥**

**कटुविकटेति ॥** असह्यवीर्य नरसिंह ! ते तव कटवः तीक्ष्णाः विकटाः विपुलाः आनाहपरिणाहवत्य इति यावत्, सटाः केसर-केशाश्च तासामोघः समूहः तस्योद्घट्टनेन आघातेन उद्भ्रष्टानि स्वस्थानाच्चलितानि च तानि भूयांसि घनानां पटलानि मण्डलानि यस्मिंस्तत् तथा । अत एव विशालमाकाशं तस्मिंल्लब्धोऽवकाशो येन तं तथा। करौ परिघावायुधविशेषाविव करपरिघौ, इत्युपमित-समासः। तयोर्विमर्दप्रोद्यमं युद्धोद्योगं ध्यायतश्चिन्तयतः मे मम अहितं दह दहेत्यन्वयः ॥ ८ ॥

**हठलुठदलघिष्ठोत्कण्ठ ! दष्टोष्ठ ! विद्युत्**
**सट ! शठकठिनोरःपीठभित्सुष्ठुनिष्ठाम् ।**
**पठति नु तव कण्ठाधिष्ठघोरान्त्रमाला**
**दह दह नरसिंहासह्यवीर्याहितं मे ॥ ९ ॥**

**हठलुठदिति ॥** हठेन प्रसभेन, प्रसभं तु बलात्कारो हठः इत्यमरः । लुठ उपघाते इति धातोः शतरि लुठन् परावर्तमानः, अतिशयेन लघुर्लघिष्ठः, न लघिष्ठोऽतिस्थूलः उत् उन्नतः कण्ठो यस्य सः तथा तत्सम्बुद्धिः । दष्टः दशनकर्मभूतः अष्ठोऽधरो यस्य सः तथा तत्सम्बुद्धिः । विद्युत इव सटाः केसराः यस्य सः तथा । सप्तम्युपमानपूर्वपदस्येति बहुव्रीहिः । तत्सम्बुद्धिः । विद्युन्निभसटेति पाठो वक्ष्यमाणवृत्तलक्षणाननुगुणत्वात् न कविहृदयंगमः । असह्यवीर्य नरसिंह यस्य तव कण्ठाधिष्ठा घोरान्त्रमाला अधितिष्ठतीत्यधिष्ठा, आतश्चोपसर्गे (३-१-१३६) इति तिष्ठतेः कर्तरि कप्रत्ययः । कण्ठस्याधिष्ठा कण्ठाधिष्ठा, सा च सा घोरा अन्त्रमाला च सा, शठ कैतव इति धातोः शठस्य कितवस्य हिरण्यकस्य कठिनं कर्कशं यत् उरः तदेव पीठम्, तस्य भिदो भेदनस्य, भिदेर्भावे संपदादिलक्षणः क्विप् । सु सुष्ठु शस्तां निष्ठां निष्पत्तिं निष्ठानिष्पत्तिनाशान्ताः इत्यमरः । 'निष्ठा निर्वाणे याचके व्रते' इति हेमचन्द्रवचनात् व्रतं वा पठति । नु वितर्के । कृशांग्याः संतापं वदति नलिनीपत्रशयनमित्यत्र[1] वदतीतिवत् पठतीवेति कविरुत्प्रेक्षते । स त्वं मम अहितं दह दहेत्यन्वयः ॥ ९ ॥

हत बहुमिहिराभासह्यसंहाररंहो
हुतवहबहुहेतिह्रेषितानन्तहेति ।
अहितविहितमोहं संवहन् सैंहमास्यं
दह दह नरसिंहासह्यवीर्याहितं मे ॥ १० ॥

---

1. अभिज्ञानशाकुन्तले तृतीयेऽङ्के

मुखं वर्णयति **हतबहुमिहिरेति** ॥ हताः प्रतिहताः तिरस्कृताः बहूनां मिहिराणां सूर्याणां, विकर्तनार्कमार्तण्डमिहिरारुणपूषणः इत्यमरः। आभा दीप्तयः स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः इत्यमरः। ताश्च असह्यसंहारस्य जगत्संहारस्य रंहो वेगः। रंहस्तरसी तु रयः स्यदः इत्यमरः। यस्य सः तथा स चासौ हुतवहोऽनलः तस्य याः बहवो हेतयः ज्वालाः रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः इत्यमरः। ताश्च येन तथा ह्रेपिताः लज्जां प्रापिताः अनन्तस्य शेषस्य हेतयः, हेतिर्द्युतिर्दीप्ती रुची (दीप्तिरुची) इति हलायुधोक्तेः। दीप्तयो येन स तथा। ह्री लज्जायामिति धातोः अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७-३-३५) इति जिह्रेतेः पुगागमे पुगंतलघूपधस्य च (७-३-८६) इति गुणः, ततो णिष्ठाप्रत्ययः।

अनेन प्रलयार्ककान्तीनां प्रलयानलज्वालानां तत्कालशेषमुखोद्गीर्णानलदीप्तीनां च तिरस्कारिका भगवन्मुखोत्थहेतिरित्युक्तं भवति।

केचित्तु हुतवहबहुहेतिह्रेपिकानन्तहेति इति पठित्वा अग्निज्वालानां लज्जाप्रदानन्तदीप्तिशालिनीति व्याचक्षते।

अत्र पक्षे हतबहुमिहिराभासह्यसंहाररंह इत्यस्य विशेषणम्। आभाकर्तृकसंहारवेगो हतो येनेत्यर्थः। अहिते शत्रौ हिरण्यके विहितः कृतः मोहो वैचित्त्यं येन तत् तथा। सिंहस्येदं सैंहं आस्यं मुखं संवहन् असह्यवीर्य नरसिंह! मे अहितं दह दहेत्यन्वयः ॥ १० ॥

गुरुगुरुगिरिराजत्कन्दरान्तर्गते वा
दिनमणिमणिशृङ्गे वान्तवह्निप्रदीप्ते ।
दधदतिकटुदंष्ट्रे भीषणोज्जिह्ववक्त्रे
दह दह नरसिंहासह्यवीर्यहितं मे ॥ ११ ॥

दंष्ट्रे वर्णयति **गुरुगुरुगिरीति** ॥ गुरुभ्यो महद्भ्यो गुरुर्महान् गुरुगुरुः 'गुरुर्महत्यांगिरसे पित्रादौ धर्मदेष्टरि' इति हेमचन्द्रः । पंचमीतियोगविभागात् समासः । गुरूणां गुरुरिति षष्ठीतत्पुरुषो वा । स चासौ गिरिर्हिमवांश्च तस्य राजन दीप्यमानश्चासौ कंदरो गुहा च तस्यान्तर्गते वान्तेन उद्गीर्णेन वह्निना प्रदीप्ते प्रकर्षेण दीपनशीले न नमिकम्पिस्म्यजसकमहिंसदीपो रः (३-२-१६७) इति ताच्छीलिकरप्रत्ययः । वान्तवह्निप्रदीप्ते दिनमणिः सूर्यः तस्य मणिः सूर्यकान्तः तस्य शृङ्गे शिखरे वा, वा विकल्पोपमानयोरिति वाशब्द उपमार्थः । ते इव विद्यमाने अतिकटुदंष्ट्रे अत्यन्त तीक्ष्णदंष्ट्रे भीषणा उद्गता जिह्वा यस्मिन् तद्यद्वक्त्रं तस्मिन् दधन् धारयन् असह्यवीर्य नरसिंह मे मम अहितं दह दह ॥

अत्र शृङ्गदंष्ट्रयोरुपमानोपमेयभावः गिरिनरसिंहयोः कंदरवक्त्रयोः वह्निजिह्वयोश्च बिंबप्रतिबिंबभावः निबद्धः इति बिम्बप्रतिबिम्बभावापन्नधर्मिकोपमालंकारः ॥ ११ ॥

अधरितविबुधाब्धिध्यानधैर्यं विदीध्य-
द्विविधविबुधधीश्रद्धापितेन्द्रारिनाशम् ।

विदधदतिकटाहोद्धट्टनेद्धाट्टहासं
दह दह नरसिंहासह्यवीर्याहितं मे ॥ १२ ॥

अट्टहासं वर्णयति **अधरितेति** ॥ विबुधा अब्धय इव इत्युपमितसमासः । तेषां ध्यानस्य धैर्यमचांचल्यं तत्करोतीतिण्यन्तात् अधरयतेः कर्मणि क्तप्रत्यये अधरितं तिरस्कृतं विबुधाब्धि ध्यानधैर्यं येन स तथा तं अधरिते विबुधानामब्धीनां च यथासंख्यं ध्यानधैर्ये येन सः तथा तमिति वा । भगवदट्टहासेन, विबुधौ सुरविद्वांसौ इत्यभिधानात् विबुधानामसंप्रज्ञातसमाधिस्थानां पूर्वभावे रूपांतरे च देवानां वा असंप्रज्ञातसमाधिरपि चलितः । अब्धीनामप्रकम्प्यत्वमपि शिथिलमासीदिति भावः । विशेषेण दीध्यतः दीप्यमानाः विविधाः विबुधाः सुराः विद्वांसो वा तेषां धिया प्रार्थनारूपबुद्ध्या श्रद्धापितः संप्रत्यायितः 'श्रद्धा संप्रत्ययः स्पृहा' इत्यमरः । इन्द्रारेः हिरण्यकस्य नाशो येन तं नरसिंहाट्टहासेन अवश्यमिंद्रारिविनाशो भविष्यतीति विबुधाः निरचैषुरितिभावः । दीधीङ् दीप्तिदेवनयोः इति धातोः ङित्त्वेन अनुदात्तङित आत्मनेपदमिति प्राप्तमात्मनेपदित्वं न भवति । व्यत्ययेन दीध्यतः[1] परस्मैपदमिति हरदत्तवचनात् । केचित्तु जक्षित्यादयः इति कृताभ्यस्तसंज्ञस्य नाभ्यस्ताच्छतुरिति नुमो निषेधज्ञापनादस्तिशप्प्रत्यय इति विज्ञायत इति दीध्यदिति साध्वित्याहुः । सुः

1. दीधीवेव्योः ङित्त्वेऽपि छन्दसत्वाद् व्यत्ययेन परस्मैपदम् जक्षित्यादयः षट् सू. ४२८ । (काशिका)

पूजायाम् (१-४-९४) इति अतिरतिक्रमणे च इति (१-४-९५) सूत्रादतिः पूजार्थः। अतिशयितः कटाहः ब्रह्मांडकटाहः। अजकटाहेत्यपि पठन्ति। तस्योद्धट्टनम् प्रतिघातः तेन इद्धो दीप्तश्चासावट्टहासश्च तं विदधत् विपूर्वो दधातिः करोत्यर्थः। कुर्वन् हे असह्यवीर्य नरसिंह मे अहितं दह दह इति संबन्धः ॥ १२ ॥

**त्रिभुवनतृणमात्रत्राणतृष्णार्द्रनेत्र-**
**त्रयमतिलघितार्चिर्विष्टपाविष्टपादम् ।**
**नवतररवितात्रं धारयन् रूक्षवीक्षं**
**दह दह नरसिंहासह्यवीर्याहितं मे ॥ १३ ॥**

नेत्रत्रयं वर्णयति **त्रिभुवनेति** ॥ तृणं प्रमाणमस्याः तृणमात्री प्रमाणे द्वयसच् दघ्नच् मात्रच् (५-२-३७) इति मात्रच् प्रत्ययः। सा च सा त्राणे तृष्णा त्राणतृष्णा, त्रिभुवनस्य पात्रादित्वात् नपुंसकत्वम्, त्रयाणां भुवनानां समाहारस्तस्य तृणमात्राणतृष्णा तया आर्द्रं क्लिन्नं आर्द्रं क्लिन्नं सार्द्रं (सांद्रम्) इत्यभिधानात्, नेत्राणां त्रयं त्रिभुवनतृणमात्रत्राणतृष्णार्द्रनेत्रत्रयं कीदृशं अतिलघितार्चिर्विष्टपाविष्टपादम्, तत्करोति इति ण्यन्तात् लघुशब्दात् कर्मणि क्तप्रत्ययेन अतिशयेन लघितानि लघूकृतानि अर्चिर्विष्टपानि तेजो भुवनानि सूर्याग्निनक्षत्रादिमण्डलानि, विष्टपं भुवनं जगत् इत्यमरः। तेष्वाविष्टाः पादाः रश्मयः यस्य तत् तथा पादा रश्म्यंघ्रितुर्यांशा इत्यमरः। उदितः उदयं प्राप्तः उच्चश्च नवः अयमनयोरतिशयेन नवतरः द्विवचनविभज्योपपदे तरबीयसुनौ (५-३-५७) इति

तरप् प्रत्ययः । स चासौ रविः उद्यदादित्यः स इव ताम्रम् अरुणं तत्तथा रूक्षाः परुषाः शत्रून् प्रति क्रूराः वीक्षाः वीक्षणानि यस्य तद् तथा एतादृशं नेत्रत्रयं धारयन् धृ धारणे चुरादिः बिभ्र-दित्यर्थः, असह्यवीर्य नरसिंह ! मे मम अहितं दह दह । अत्र वृत्त्यनुप्रासः साधारणः, विष्टपाविष्टपादमित्यत्र यमकालंकारश्च । यदाह—यमकं बहुवर्णानां साच्कानां द्विस्समीरणमिति। त्रिभुव-नेति वदता नृसिंहकटाक्षवीक्षणलेशोऽपि त्रिभुवनपरित्राणहेतुरिति महिमा वर्णितः ॥ १३ ॥

**भ्रमदभिभवभूभृद्भूरिभूभारसद्भिद्**
**भिदनवविभवभ्रूविभ्रमादभ्रशुभ्र ।**
**ऋभुभवभयभेत्तर्भासि भोभोविभोभी**
**दह दह नरसिंहासह्यवीर्याहितं मे ॥ १४ ॥**

भ्रूविलासं वर्णयति **भ्रमदिति ॥** भ्रमन् अनवस्थितः उच्चा-वचत्व (यात्रा) विषयः अभिभवः पराभवो यैस्ते ते च ते भूभृतः पर्वतास्तेभ्योऽपि भूरयोऽधिकाः भूभाराः, ते च ते, सतः साधुजनान् भिन्दन्ति इति सद्भिदः तान् भिनत्ति विदारयति इति, भित्, सचासौ अनवः पुराणः अनादिसिद्धो विभवः । विभवो वर्षसंपत्ती इत्यभिधानात्, संपत्तिर्यस्य स चासौ भ्रुवो-र्विभ्रमो विलासो यस्य स तथा तस्य सम्बुद्धिः । अदभ्रः बहुलः शुभ्रः धवलिमा यस्य स तथा पूर्ववत् । विभ्रमादभ्रशोभ इति पाठे अनवविभवेन भ्रूविभ्रमेण अदभ्रा अनल्पा शोभा यस्य स

इत्यैकपद्येन (एकपदेन एकपदत्वेन) व्याख्येयम् । अभिनवविभवभ्रूविभ्रमेतिपाठे अभिनवा प्रत्यग्रा विशिष्टा भा कान्तिः यस्य विभ्रमस्य इत्यर्थः । पक्षवन्तः पर्वताः अनेकान्ताभिभवापादनेन लोकान् अबाधन्त तेभ्योऽप्यधिकेषु देवारिषु (देवलोक) लोकबाधकत्वं यत्तदपि भ्रूविलासेन भगवान् पर्यहार्षीदिति भावः । ऋभवः । 'आदित्या ऋभवोऽस्वप्नाः' इत्यभिधानात् । देवाः तेषां भवभयं 'भवः संसारजन्मनोः' इति कविदर्पणोक्तेः । भवः संसारः तस्माद्भयं तस्य भेत्ता विदारयिता तस्य संबुद्धिः । घटानां निर्मातुः त्रिभुवनविधातुश्च कलहः इत्यत्रेव अत्रापि शेषषष्ठ्या समासः । येन तृजकाभ्यां कर्तरि (२-२-१५) इति समासप्रतिषेधात् कथं भयभेत्तः ! इति चोद्यमनवकाशम् । कारकषष्ठ्यास्तत्र प्रतिषेध इति वैयाकरणवचनात् । भो भो ओकारान्ताव्ययमस्तीत्यमरव्याख्यातृवचनात् भो भो इति सम्बोधने, विभो समर्थ न विद्यते भीः भीतिः यस्यासौ अभीः विभासि दीप्यसे स त्वमसह्यवीर्य नरसिंह मे ममाहितं दह दहेत्यन्वयः ॥ १४ ॥

श्रवणकचितचञ्चत्कुण्डलोच्चण्डगण्ड
भ्रुकुटिकटुललाटश्रेष्ठनासारुणोष्ठ ।
वरद सुरद राजत्केसरोत्सारितारे
दह दह नरसिंहासह्यवीर्याहितं मे ॥ १५ ॥

वदनावयवान् वर्णयति **श्रवणेति** ॥ कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः इत्यभिधानात् (इत्यमरोक्तेः) श्रवणे कर्णौ

तयोः कचिते कच बन्धने इत्यतः क्तः, संबद्धे। खचिते इति पाठे खच भूतप्रादुर्भाव इति धातोः धातूनामनेकार्थत्वात् उक्तार्थता। ते च ते चलन्ती कुण्डले यस्य स तथा तस्य सम्बुद्धिः। 'चण्डस्त्वत्यन्तकोपनः' इत्यमरोक्तेरतिकोपनावतिक्रूरौ गण्डौ कपोलौ यस्य स पूर्ववत् भ्रुकुटिः भ्रूविक्षेपः तया कटु क्रूरं ललाटं यस्य सः श्रेष्ठा अतिशयेन प्रशस्ता नासा नासिका यस्य सः, गोस्त्रियोरुपसर्जनस्य (१-२-४८) इति ह्रस्वः। अरुणः शोणः ओष्ठो यस्य सः। वरान् ददाति इति वरदः तस्य सम्बुद्धिः हे वरद! शोभनाः रदाः दन्ताः यस्य सः तस्य सम्बुद्धिः, हे सुरद! राजन्तः केसराः सटाः, तैरुत्सारिताः अपगमिताः विद्राविताः अरयो येन सः तथा तस्य सम्बुद्धिः असह्यवीर्य नरसिंह मे मम अहितं दह दह इत्यन्वयः॥ १५॥

**कविकचकचराजद्रत्नकोटीरशालिन्**
**गलगतगलदुस्रोदाररत्नांगदाढ्य।**
**कनककटककांचीशिंजिनीमुद्रिकावन्**
**दह दह नरसिंहासह्यवीर्याहितं मे॥ १६॥**

मस्तकाद्यवयवगतभूषणानि वर्णयन्नाह **कविकचेति**॥ मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः इत्यभिधानात्। कं मस्तकः तस्मिन् विकचाः व्याकोचविकचस्फुटाः इत्यमरोक्तेः (इत्यभिधानात्) स्फुटाः 'कचो बृहस्पतेः पुत्रे केशे शुष्कव्रणेऽपि च' इति कविदर्पणवचनात् कचाः केशाः तेषु राजन् रत्नानां कोटीरः

'कोटीरो ना किरीटोऽस्त्री मौलिर्ना मुकुटं न ना' इति शब्द-रत्नाकरोक्तेः, मुकुटं तेन शालितुं श्लाघितुं शीलमस्येति तथा शाल श्लाघायामितिधातोः सुप्यजातौ णिनिस्ताच्छील्ये (३-२-७८) इतिणिनिप्रत्ययः । तत्संबुद्धिः । गलगतं कंठासक्तं गलन्तः गल स्रवणे (अवस्रंसने) इतिधातोः अवस्रंसन्तः उस्राः किरणाः यस्य तत् तदुदारं महच्च तन् रत्नं यस्य स तथा कंठाबद्धकौस्तुभरत्नमित्यर्थः अंगदं केयूरमंगदं तुल्ये इत्यभिधानात् (इत्यमरोक्तेः) केयूरं बाहु-भूषणं तेन आढ्य संपन्न! कनकानां कटके वलयौ कांची मेखला सिंजिन्यौ, सिंजिनी नूपुरज्ययोः इति वैजयन्त्युक्तेः नूपुरे मुद्रिका अंगुलीयकानि च ताः अस्य सन्तीति तद्वान् तत्सम्बुद्धिः, हे असह्यवीर्य नरसिंह मे अहितं दह दहेत्यन्वयः ॥ १६ ॥

**अरिदरमसिखेटौ बाणचापे गदां स-**
**न्मुसलमपि दधानः पाशवर्यांकुशौ च ।**
**करयुगलधृतांत्रस्रग्विभिन्नारिवक्षो**
**दह दह नरसिंहासह्यवीर्याहितं मे ॥ १७ ॥**

नरसिंहषोडशभुजानामायुधानि व्यापारांश्चाह **अरीति ॥** अराण्यस्य सन्तीति अरि, चक्रं, दरोऽस्त्रियां भये शंखे इत्यभि-धानात् दरः शंखः तं असिखेटौ खड्गचर्मणी बाणचापे शरशार्ङ्गे, 'अस्त्रियौ चापधनुषी' इति वैजयन्त्युक्तेःचाप शब्दो नपुंसक-लिंगेऽपि, गदां कौमोदकीं सन्मुसलं कान्तिमदयोऽग्रं पाशवर्यांकुशौ च पाशवर्यं पाशश्रेष्ठं अंकुशं च दधानः, कराणां युगलानि त्रीणि तेपु धृतं भावे निष्ठा धरणं अंत्रस्रक् विभिन्नं अरिवक्षश्च यस्य स तथा।

तत्र एकेन करयुगलेन शत्रोः मस्तकपादग्रहणं अन्येन अंत्रमालाधारणं अपरेण तेन अरिवक्षोविदारणं च भगवानकरोदित्युक्त्या षोडशभुजत्वमुक्तं भवति। तदुक्तं—

"ऊर्ध्वाभ्यामन्त्रमाले तदनु दरमरिं खड्गखेटौ वहंतं
बाणं चापं दधानं मुसलमपि गदांपाशमप्यंकुशं च।
ऊर्वोर्निक्षिप्य दैत्यं तदुदरकुहरं दारयन्तं च दोर्भ्यां
[1]रक्तज्वालामयं तं ज्वरसमरभये चिन्तयेदुग्रसिंहम्॥" इति।

दधदरिखेटौ बाणचापे गदां सन्-
मुसलमपि कपाले चांकुशं पाशशूले।
करयुगलधृतांत्रस्रग्विभिन्नारिवक्षो
दह दह नरसिंहासह्यवीर्याहितं मे॥

दहदहेति पाठे कराणां युगलयोर्धृतांत्रस्रग्विभिन्नमरिवक्षश्च यस्य सः तत्सम्बुद्धिरिति व्याख्याने न कोऽपि दोषः। असह्यवीर्य नरसिंहेति पूर्ववत्॥ १७॥

**चट चट चट दूरं मोहय भ्रामयारीन्**
**कडि कडि कडि कायं ज्वाल(र)य स्फोटयस्व।**
**जहि जहि जहि वेगं शात्रवं सानुबन्धं**
**दह दह नरसिंहासह्यवीर्याहितं मे॥ १८॥**

एवं नरसिंहमापादमस्तकमावर्ण्य इदानीं कविः स्वाभीष्टं प्रार्थयते **चटचटेति**। चट स्फुट भेदने इति चुरादौ पठितः,

1. रक्तज्वाला वमन्तं, दीप्तज्वालामयं तं इति पा.

अनित्यण्यंताश्चुरादय इति पक्षेऽन्य [1](न्याय) विकरणः दूरं यथा भवति तथा अरीन् चट चट भिंधि भिंधि। चापले द्वे भवत इति वक्तव्यम् इति वार्तिके संभ्रमेण प्रवृत्तिः चापलमिति चापलशब्दार्थमभिधाय वृत्तिकारः नावश्यं द्वे एव, यावद्भिः सोऽर्थोऽवगम्यते तावन्तः प्रयोक्तव्या इत्युक्त्वा बुध्वस्व बुध्वस्वेत्युदाहृतवानिति, अत्रापि चटतेस्त्रिरुच्चारणं युक्तम्। यद्वा चट चटेत्युच्चाटयेत्यर्थः। धातुपाठे भेदनं स्वस्थानादपसरणं विवक्षितं। किंच अरीन् मोहय मुह् वैचित्त्ये मुह्यतः प्रेरयेति हेतुमति णिचा कर्तव्यमूढान् कुर्वित्यर्थः।

भ्रामय भ्रमु अनवस्थाने भ्राम्यतः कुर्विति पूर्ववण्णिच्। अनवस्थितान् विधेहीत्यर्थः। भ्रमेरमन्तत्वेऽपि मितां ह्रस्वः (६-४-९२) इति सूत्रे वा चित्तविरागे (६-४-९१) इत्यतो वाग्रहणानुवृत्त्या व्यवस्थितविभाषाश्रयणादितिवृत्तिकार इति वैयाकरणवचनात्। रजो विश्रामयन् गङ्गां संक्रामयति इत्यादिप्रयोग इव भ्रामयेति प्रयोगः साधुः। शात्रवं कायं देहं कडि कडि, कडि खड खडिभेदने इत्यतः णिचोऽनित्यत्वपक्षे लोटि भेदय भेदय भेदय इति पूर्ववत् त्रिरुक्तिः।

कडि कडि इति पठित्वा कड मद इति भौवादिकस्य कडतेः घञर्थे कविधानमिति कप्रत्यये कडो मदः ततः इप्रत्यये प्रकारे गुणवचनस्य (८-१-१२) इति सादृश्ये द्विर्भावे कडि कडि इति

---

1. शत्रुविकरणः

मदिरामत्तसदृशो गजादिर्विवक्षितः । ततोऽपि कडी मदवान कायो देहः ॥

कडि कडि कडि काय(स्त)मित्यपि केचिद् व्याचक्षते ॥ ज्वालय ज्वलन्तं कुरु, ज्वल दीप्तौ, शत्रुकायो यथा ज्वलेत् ज्वलितो भवेत् तथा कुर्वित्यर्थः । ज्वलतु (मल्मना ?) [1]ज्वलह्वलनमामनुपसर्गाद्वा (गणसूत्रम्) इति मित्वस्य विकल्पितत्वात् ज्वालयेति साधु ।

स्फोटयस्व, स्फुट विशरणे इति धातुः । स च नित्यात्मनेपदी, स्फुटं विशीर्यमाणं कुरु । अपि च सानुबन्धं अनुबन्धसहितं शत्रोः अयं शात्रवः तं, वेगं संरंभं । जहि जहि जहि हनहिंसागत्योः । [2]हंतेर्जभावः । सेर्हिः इति हि आदेशश्च । हिंधि हिंधि हिंधि वा, विनाशयेत्यर्थः । दहदहेत्यादिपूर्ववत् ॥ १८ ॥

---

1. ज्वलह्वलह्मलनमामनुपसर्गाद्वा (गणसूत्रम्) एषां मित्त्वं वा । प्राप्तविभाषेयम् । ज्वलयति ज्वालयति । उपसृष्टे तु नित्यं मित्वम् । प्रज्वलयति । कथं तर्हि प्रज्वालयति उन्नामयतीति । घञन्तात् तत्करोतीति णौ । कथं संक्रामयतीति, मितां ह्रस्व इति सूत्रे वा चित्तविरागे इत्यतो वा इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणात् इति वृत्तिकृत । एतेन रजो विश्रामयन् राज्ञां धुर्यान् विश्रामयेति सः इत्यादिव्याख्यातम् । (घटादयो मितः इतिगणसूत्रसमीपे)

2. हंतेर्जः (६-४-३६)

विधिभव[1]विबुधेशभ्रामकाग्निस्फुलिंग-
प्रसविविकटदंष्ट्रोज्जिह्ववक्त्रत्रिनेत्र ।
कलकलकल कामं पाहि मां ते सुभक्तं
दह दह नरसिंहासह्यवीर्याहितं मे ॥ १९ ॥

**विधिभवविबुधेशेति ॥** विधिर्ब्रह्मा विभुश्शिवः । 'विभुश्शिवे प्रभौ नित्ये' इति विश्वः । विबुधेशो देवेन्द्रः तेषां भ्रामकाः अनवस्थाकारकाः अग्निस्फुलिंगाः वह्निकणाः तान् प्रसवितुं शील-मस्यास्तीति प्रसवि, प्रपूर्वात् षूञ् प्राणिप्रसवे इत्यस्मात् जि-दृ-क्षि-विश्री-इण्-वम-अव्यथ-अभ्यम-परिभू-प्रसूभ्यश्च (३-२-१५७) इति णिन्यपवादः ताच्छीलिकः इनिः । भ्रामकाग्र्यस्फुलिंगेति पाठे त्रिषु स्फुलिंगोऽग्निकण इत्यमरोक्तेः, अग्र्याः श्रेष्ठाः स्फुलिंगा अग्निकणाः इति व्याख्येयम् । विकटे विशाले दंष्ट्रे विकटदंष्ट्रे च उद्गता जिह्वा यस्मात् उज्जिह्वं वक्त्रं तच्च त्रयाणां नेत्राणां समाहारः त्रिनेत्रं, विकटदंष्ट्रोज्जिह्ववक्त्रत्रिनेत्रं, प्राण्यंगत्वात् द्वन्द्वश्च प्राणितूर्यसेनांगानां (२-४-२) इति द्वन्द्वैकवद्भावः । तत् यस्य स तथा तत्सम्बुद्धिः । कलः अव्यक्तमधुरः कलकलः कोलाहलः यस्य स तथा । कामं निकामं ते तव सुभक्तं मां पाहि रक्ष । अहितं दहेत्यादिपूर्ववत् ॥ १९ ॥

कुरु कुरु करुणां तां सांकुरां दैत्यपोते
दिश दिश विशदां मे शाश्वतीं देवदृष्टिम् ।

1. अत्र विधिविभुविबुधेश इति पाठेन भाव्यमिति प्रतिभाति।

जय जय जयमूर्तेऽनार्त जेतव्यपक्षं
दह दह नरसिंहासह्यवीर्याहितं मे ॥ २० ॥

**कुरु कुर्विति** । दैत्यपोते हिरण्यकशिपुशिशौ प्रह्लादे सांकुराम्ंकुरेण प्रादुर्भावेण सहितां तां प्रसिद्धां करुणां मय्यपि कुरु विशदां शुभ्रां निर्मलामिति यावत् शाश्वतीं ध्रुवां, शाश्वतस्तु ध्रुवो नित्य इत्यमरः । शश्वच्छब्दाद्भवार्थेऽण् प्रत्ययः । अव्ययानां भमात्रे टिलोप इति न भवति । येषां च विरोधः शाश्वतिकः (२-४-९) इति सौत्रनिर्देशात् । देवदृष्टिं विंबसाक्षात्कारम् । देवेति सम्बुद्धिर्वा । मे दिश दिश । दिश अतिसर्जने देहि देहि । जयस्य मूर्तिः जयमूर्तिः । जयतीति जया पचाद्यच् (जयः) सा, स एव वा मूर्तिः यस्येति वा । अनार्त ! आर्ते आर्तिः पीडा तद्रहित निर्दोष इत्यर्थः । आर्तो न भवतीति वा अनार्तः तत्सम्बुद्धिरिति वा । जेतव्यपक्षं शत्रुपक्षं जय जय जि अभिभवे, अभिभव (तिरस्कुरु) दह दहेत्यादि पूर्ववत् । सर्वत्रापि क्रियापदे चापले द्विर्भावः ॥ २० ॥

स्तुतिरियमहितघ्नी सेविता नारसिंही
तनुरिव परिशांता मालिनी साभितोलम् ।
तदखिलगुरुमाग्र्यश्रीदरूपा महद्भि-
स्सुनियमनयकृत्यैस्सद्गुणैर्नित्ययुक्ता ॥ २१ ॥

एवं समनन्तरातीतत्रिश्लोक्या स्वाभीष्टं संप्रार्थ्य इदानीं स्वकृतस्तुतेर्भगवत्तनुसदृशतया महाफलहेतुत्वं सूचयन्नाह **स्तुति-**

**रियमिति ॥** नारसिंही नरसिंहसंबन्धिनी तनुरिव सेयं एवं सेविता (संसेव्या एवमारचिता) अहितं बाह्यमाभ्यन्तरं चानिष्टं हन्तीति अहितघ्नी । अमनुष्यकर्तृके च (३-२-५३) इति हन्तेष्टकि, गमहनेत्युपधालोपे हो हन्तेरितिकुत्वेन घादेशे टकः टित्वात् टिड्ढाणञ् इत्यादिना ङीपि च अहितघ्नी इति रूपम् ।

परिगता, शांतं भावे निष्ठा शान्तिः, शांतं परिगता परिशान्ता । अत्यादयः क्रान्ताद्यर्थे द्वितीयया इति समासः । परिसमाप्ता (इत्यर्थे) इति केचित् । अभितः सर्वतः सर्वेष्वपि पद्ये(क्षे)षु मालिनी मालिनीनामकवृत्तरचिता का सा मालिनीत्यतः तत्स्वरूपं सूचयन् आह तदखिलेति । तच्छब्देन वक्ष्यमाणा नियमनयरूपाः गणाः गृह्यन्ते । तेषु अखिला वर्णा गुरवो यस्य स चासौ मश्च मगणः । श्रियं ददाति इति श्रीदम्, तेन अखिल-गुरुणा मगणेन अग्र्यं श्रेष्ठं श्रीदं रूपं यस्याः सा तथोक्ता मगणः श्रीप्रद इत्येतत् मो भूमिस्त्रिगुरुः श्रियं वितनुते इति शास्त्रप्रसिद्धं, महद्भिः 'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' इत्युणादौ मह प्रज्ञायामिति धातुरतिप्रत्ययान्तो निपातित इति, पूज्यैरित्यर्थः । सुनियमनयकृत्यैः नियमनयेति नगणयगणमगणनगणयगणा उपलक्ष्यन्ते । शोभमानाः नियमनयाः, कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः इत्यभिधानात् कृत्याः भेद्याः विशेष्यभूताः येषु ते तथोक्तास्तैः । यद्वा शोभनाः नियमनया तैर्भेद्याः विशेष्याः सुनियमनयकृत्याः तैर्नो गणो यो गण इत्यादिरूपैः सद्गुणैः निर्दोष-

गुणैः नित्ययुक्ता निरन्तरं यथा तथा युक्ता अभितोऽलं साकल्येऽभिमुखेऽभितः इत्यभिधानात् अभितः साकल्येन अलं पर्याप्ता परिपूर्णा अलं भूषणपर्याप्तिशक्तिवारणवाचकं इत्यभिधानात् । तनुपक्षे परिशान्ता हिरण्यकशिपुवधानन्तरं सौम्या मालिनी वैजयन्त्याख्यमालावती व्रीह्यादिलक्षण[1] इनिः, शिखादिभ्यः[2] इनिर्वाच्यः, यवखदादिभ्यः इकः इति नियमितः, ततो ङीप् । तदखिलगुरुमाग्र्यश्रीदरूपा स प्रसिद्धः अखिलगुरुर्ब्रह्मा, गुरुर्ब्रह्माखिलानामित्यनुव्याख्यानोक्तेः स च मा लक्ष्मीश्च तयोरग्र्यश्रीदरूपा । अनेन चतुराननात्मककण्ठासक्तकौस्तुभरत्नस्य अंकारूढमहालक्ष्म्याश्च संपत्तिदायिनीत्युक्तं भवति । शोभनानि नियमो नयो नीतिश्च कृत्यानि कार्याणि च सुनियमनयकृत्यानि येषां तैर्महद्भिः पूज्यैः सद्गुणैः साधुसमूहैः नित्ययुक्ता पूर्ववत् सेविता च सर्वतः परिपूर्णा इति व्याख्येयम् । अत्र श्लेषानुप्रणितोपमालंकारः ॥ २१ ॥

लिकुचतिलकसूनुस्सद्धितार्थानुसारी  
नरहरिनुतिमेतां शत्रुसंहारहेतुम् ।  
अकृत सकलपापध्वंसिनीं यः पठेत्तां  
व्रजति नृहरिलोकं कामलोभाद्यसक्तः ॥

॥ इति श्रीमत्कविकुलतिलकत्रिविक्रमपंडिताचार्यविरचिता नरसिंहस्तुतिः समाप्ता ॥

---

1. व्रीह्यादिभ्यश्च (५-२-११६) इनिः
2. शिखामालासंज्ञादिभ्यः इनिः (वा)

शिष्यानुजिघृक्षया स्वनाम सूचयन् स्वकृतस्तुतिं पठतां फलमाह **लिकुचेति** । लिकुचानां लिकुचकुलोद्भवानां तिलकः श्रेष्ठः षष्ठी (२-२-८) इति शेषषष्ठ्या समासः । लिकुचतिलकः सुब्रह्मण्याख्यसूरिः तत्सूनुः तत्पुत्रः त्रिविक्रम इति यावत् । कीदृशः सद्भ्यो हितोऽर्थः प्रयोजनं तत् अनुसर्तुं शीलमस्य सद्धितार्थानुसारी शत्रुसंहारहेतुं सकलपापध्वंसिनीं संचितागामिसकलपापविनाशिनीं एतां नरहरिनुतिं नरसिंहस्तुतिं अकृत कृतवान कामलोभाद्यसक्तः कामादिषड्वर्गहीनः काम्यन्त इति कामाः ऐहिकफलानि तेषु त्यागबुद्धिः तत्रासक्त इतिवा यः पुरुषः तामेतां नृसिंहस्तुतिं पठेत् सः नृहरिलोकं लोकृ दर्शने इति धातोः नृहरिदर्शनं नृहरिलोकं भगवदनुग्रहं वा प्राप्य परमपदं व्रजति प्राप्नोतीति स्वकृतस्तवस्याखिलक्लेशनिवृत्तिविशिष्टपरमानंदानुभवरूपं फलमिति दर्शितमिति सर्वं मंगलम् ॥

**प्रह्लादसत्त्राणकृतावतारे पयोधिकन्याप्रणयिन्युदारे ।**
**विदूरदोषे वपुषाऽनृवेषे निषेदुषी स्यादपि शेमुषी नः ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरीन्द्रतीर्थश्रीपादशिष्यसुमतीन्द्रयतिविरचिता नृसिंहस्तुतिव्याख्या

एकावल्याख्या समाप्ता ॥

